कर्मत्वापादनमात्ररूपा, अनुभवरूपा च, तत्र कर्मत्वापादनरूपां स्थितिमधिकृत्य मोहनीयस्य कर्मण उत्कृष्टस्थितिः सप्ततिसागरोपमकोटीकोट्यः, अनुभवरूपामङ्गीकृत्य तु अबाधोनिका, येषां हि कर्मणां यावत्यः सागरोपमकोटीकोट्यः तेषां तावन्ति वर्षशतान्यबाधाकालः, स च कालो मोहनीयस्य सप्तवर्षसहस्ररूपः तदानीञ्च कर्म नोदयं यातीति तदूना सप्ततिः सागरोपमकोटीकोट्योऽनुभवरूपा स्थितिः, 5 कर्मदलिकनिषेकोऽपि तदैव, तावन्मान एव, कर्मदलिकनिषेको नाम ज्ञानावरणीयादिकर्मदलिकस्य पूर्वनिषिक्तस्यानुभवनार्थमुदये प्रवेशनम्, तत्र सर्वस्मिन्नपि बध्यमाने कर्मणि निजमबाधाकालं परित्यज्य ततो दलिकनिक्षेपं करोति, तत्र प्रथमायां स्थितौ समयलक्षणायां प्रभूततरं द्रव्यं कर्मदलिकं निषिञ्चति, तत ऊर्ध्वं द्वितीयसमये विशेषहीनं तृतीयसमये विशेषहीनमेवं यावदुत्कृष्टस्थितिकर्मदलिकं तावद्विशेषहीनं निषिञ्चति, अयञ्च कर्मनिषेकः ॥ ६२ ॥

10 स्थितिः कालविशेषः स च सूर्यावृत्तेर्भवतीत्यावृत्तिमानमाह—

**सूर्यश्चतुर्थचन्द्रसंवत्सरस्य हैमन्ते एकसप्ततिदिनेऽतिक्रान्ते आवृत्तिं करोति ॥ ६३ ॥**

**सूर्य इति,** प्रथमतश्चन्द्रसंवत्सरत्रये दिनानां सहस्रं द्विनवतिः षट्द्विषष्टिभागा भवन्ति, आदित्यसंवत्सरे दिनानां शतत्रयं षट्षष्टिश्च भवन्ति, तत्त्रितये च सहस्रमष्टनवत्यधिकं भवति, चन्द्र-15 युगमादित्ययुगञ्चाषाढ्यामेकं पूर्यतेऽपरञ्च श्रावणकृष्णप्रतिपद्यारभ्यते, एवञ्चादित्ययुगसंवत्सरत्रयापेक्षया चन्द्रयुगसंवत्सरत्रयं पञ्चभिर्दिनैः षट्पञ्चाशता च दिनद्विषष्टिभागैरूनं भवतीति कृत्वाऽऽदित्ययुगसंवत्सरत्रयं श्रावणकृष्णपक्षस्य चन्द्रदिनषट्के साधिके पूर्यते, चन्द्रयुगसंवत्सरत्रयन्त्वाषाढ्याम्, ततश्च श्रावणकृष्णपक्षसप्तमदिनादारभ्य दक्षिणायनेनादित्यश्चरन् चन्द्रयुगचतुर्थसंवत्सरस्य चतुर्थमासान्तभूतायां अष्टादशोत्तरशततमदिनभूतायां कार्त्तिक्यां द्वादशोत्तरशततमे स्वकीयमण्डले चरति, ततश्चान्यान्ये-20 कसप्ततिर्मण्डलानि तावत्स्वेव दिनेषु मार्गशीर्षादीनां चतुर्णां हैमन्तमासानां सम्बन्धिषु चरति, ततो द्विसप्ततितमे दिने माघमासे बहुलपक्षत्रयोदशीलक्षणे सूर्यः दक्षिणायनान्निवृत्त्योत्तरायणेन चरतीति ॥

ज्योतिश्चारविज्ञानमपि कलात्मकमतस्ता आह—

**लेखगणितरूप्यनाट्यादयो द्वासप्ततिकलाः ॥ ६४ ॥**

**लेखेति,** कला विज्ञानं सा च कलनीयभेदाद्विसप्ततिर्भवति, तद्यथा—लेखनं लेखोऽक्षरवि-25 न्यासः, तद्विषया कलापि लेख एवोच्यते, एवं सर्वत्र, स च लेखो द्विधा लिपिविषयभेदात्, लाटादिदेशभेदतस्तथाविधविचित्रोपाधिभेदतो वा लिपिरनेकविधा, तथाहि पत्रवल्ककाष्ठदन्तलोहताम्ररजतादयोऽक्षराणामाधारस्तथा लेखनोत्कीर्णनस्यूतव्यूतछिन्नभिन्नदग्धसंक्रान्तितोऽक्षराणि भवन्तीति । विषयापेक्षयाऽप्यनेकधा, स्वामिभृत्यपितृपुत्रगुरुशिष्यभार्यापतिशत्रुमित्रादीनां लेखविषयाणामप्यनेकत्वात्तथाविधप्रयोजनभेदाच्च । अक्षरदोषाश्चैते 'अतिकार्श्यमतिस्थौल्यं वैषम्यं पंक्तिवक्रता । अतुल्यानां च 30 सादृश्यमभागोऽवयवेषु चे'ति । गणितं—संख्यानं सङ्कलिताद्यनेकभेदं पाटीप्रसिद्धम् । रूप्यं—लेप्यशिलासुवर्णमणिवस्त्रचित्रादिषु रूपनिर्माणम् । नाट्यं—साभिनयनिरभिनयभेदभिन्नं ताण्डवम् । गीतं—गान्धर्वकला—ग्रामविज्ञानम् । वाद्यं—ततविततादिभेदम् । स्वरगतं—गीतमूलभूतानां षड्जऋषभादिस्वराणां

ज्ञानम् । पुष्करगतं मृदङ्गमुरजादिभेदभिन्नं तद्विषयकं विज्ञानम्, पृथक्कथनं परमसङ्गीताङ्गत्वख्यापनार्थम् । समतालं-गीतादिमानकालस्तालः स समोऽन्यूनाधिकमात्रिकत्वेन यस्माज्ज्ञायते तत्समतालविज्ञानम् । द्यूतं-प्रसिद्धम् । जनवादो-द्यूतविशेषः । पाशकं-प्रतीतम् । अष्टापदं-सारिफलकद्यूतम् । दकमृत्तिका-दकसंयुक्तमृत्तिका विवेकद्रव्यप्रयोगपूर्विका तद्विवेचनफलाप्युपचारात्तथा । अन्नविधिः सूपकारकला । पानविधिः-दकमृत्तिकाकलया प्रसादितस्य सहजनिर्मलस्य तत्संस्कारकरणम् । वस्त्र- 5
विधिः-परिधानीयाविरूपस्य वस्त्रस्य नवकोणदैविकादिभागयथास्थाननिवेशादिविज्ञानम् । शयनविधिः-पल्यङ्कादिविधानम् 'कर्माङ्गुलं यवाष्टकमुदरासक्तं तुषैः परित्यक्तम् । अङ्गुलशतं नृपाणां महती शय्या जयाय कृते'त्यादिकं विज्ञानम् । आर्या-सप्तचतुष्कलगणादिव्यवस्थानिबद्धा मात्राछन्दोरूपा । प्रहेलिका-गूढाशयपद्यम् । मागधिका-रसविशेषः । गाथा-संस्कृतेतरभाषानिबद्धाऽऽर्यैव । श्लोकमनुष्टुब्विशेषः । गन्धयुक्तिः-गन्धद्रव्यविरचनम् । मधुसिक्तं-मधुरादिषड्रसप्रयोगः । आभरण- 10
विधिः-आभूषणानां विरचनघटनपरिधानानि । तरुणीपरिकर्म-युवतीनामनङ्गशतक्रिया वर्णादिवृद्धिरूपा । स्त्रीपुरुषहयगजगोत्वकुक्कुटमेढकचक्रछत्रदण्डासिमणिकाकणीचर्मलक्षणानि, चन्द्रसूर्यराहुचाराः सौभाग्यदौर्भाग्यविद्यामंत्ररहस्यविज्ञानानि, सभाप्रवेशविधानं, ज्योतिश्चक्रचारः, ग्रहाणां वक्रगमनादिप्रतिचारः, व्यूहः-युयुत्सूनां सैन्यरचना, प्रतिव्यूहः-तत्प्रतिद्वन्द्विना तद्भङ्गकरणविधिः स्कन्धावारस्य मानम् । नगरमानं-द्वादशयोजनायामनवयोजनव्यासादिपरिज्ञानम् । वस्तुस्थापनविधानम्, कटकवा- 15
सविधानम्, वस्तुनिवेशः, नगरनिवेशः इषुशास्त्रम्, त्सरुप्रवादः खड्गशिक्षाशास्त्रम् । अश्वशिक्षा हस्तिशिक्षा धनुर्वेदः हिरण्यादिपाकः, बाहुदण्डादियुद्धं नालिकादिक्रीडा-द्यूतविशेषः । पत्रच्छेद्यादि सजीवनिर्जीवकरणम्, शकुनरुतमिति ॥ ६४ ॥

बलदेवगणधराः कलाधरा एवातस्तदाश्रयेणाह—

**विजयबलदेवः त्रिसप्ततिवर्षलक्षाणि सर्वायुषमग्निभूतिगणधरश्चतुः- 20
सप्ततिवर्षाणि च पालयित्वा सिद्धः ॥ ६५ ॥**

**विजयेति,** द्वारावत्यां ब्रह्मराजस्य पुत्रः सुभद्राकुक्षिसम्भूतो विजयो नाम द्वितीयो बलदेवः, स च स्वलघुभ्रातृद्विसप्ततिवर्षशतसहस्रायुर्द्विपृष्ठवासुदेवमरणानन्तरं श्रामण्यमङ्गीकृत्योत्पादितकेवलज्ञानः त्रिसप्ततिवर्षशतसहस्राणि सर्वायुरतिवाह्य मुक्तिं गतः । अग्निभूतिर्महावीरस्य द्वितीयो गणधरः, तस्येह चतुःसप्ततिवर्षाण्यायुःषट्चत्वारिंशद्वर्षाणि गृहस्थपर्यायः, द्वादश छद्मस्थपर्यायः षोडश केवलि- 25
पर्याय इति ॥ ६५ ॥

गणधरास्तीर्थकराणां भवन्तीति तद्विशेषवक्तव्यतामाह—

**शीतलः पञ्चसप्ततिः पूर्वसहस्राणि शान्तिश्च पञ्चसप्ततिवर्षसहस्राणि गृहवासमध्युवास ॥ ६६ ॥**

**शीतल इति,** दशमतीर्थकरः शीतलः, सर्वसन्तापकारणविरहाह्लादभावजननाच्च शीतलः, अथवा 30
हि पितुरसहृशः पित्तदाहोऽभवत्, स चौषधैर्नानाप्रकारैर्नोपशाम्यति, अस्मिंश्च गर्भगते देव्याः परामर्शे स

दाह उपशान्तस्तेन शीतल इति नाम । पञ्चविंशतिपूर्वसहस्राणि कुमारत्वे राज्ये च पञ्चाशदिति गृहवासोऽस्य पञ्चसप्ततिः पूर्वसहस्राणि, ततः प्रव्रज्य केवलीभूतः, व्रतपर्यायोऽस्य पञ्चविंशतिः पूर्वाणां सहस्राणि । शान्तिः भरतवर्षे वर्त्तमानावसर्पिण्यां जातः षोडशतीर्थंकरः, अस्मिन् गर्भगते पूर्वं यन्महदशिवमासीत्तस्योपशमो जातस्तेन कारणेन शान्तिजिनः, अस्य भगवतः कुमारत्वे पञ्चविंशतिवर्षसहस्राणि माण्डलिकत्वेऽपि पञ्चविंशतिवर्षसहस्राणि चक्रित्वे पञ्चविंशतिसहस्राणि श्रामण्ये च पञ्चविंशतिवर्षसहस्राणि दीक्षापर्यायः सर्वायुश्च वर्षलक्षमेकं जातम् ॥ ६६ ॥

तीर्थपतिप्रोक्तभवनावासानाह—

## विद्युत्कुमाराणां षट्सप्ततिर्भवनावासलक्षाणि ॥ ६७ ॥

**विद्युदिति**, भवनवासिनां देवानां दशस्वपि निकायेषु संपीड्य चिन्त्यमानानि सर्वाण्यपि भवनानि सप्तकोट्यो द्वासप्ततिश्च शतसहस्राणि, एतानि चाशीतिसहस्राधिकलक्षयोजनबाहल्याया रत्नप्रभायाश्चाध उपरि च प्रत्येकं योजनसहस्रमेकं मुक्त्वा यथासम्भवमावासा इति, शेषेऽष्टसप्ततिसहस्राधिकलक्षयोजनप्रमाणे मध्यभागेऽवगन्तव्यानि, अन्ये त्वाहुर्नवयोजनसहस्राणामधस्ताद्भवनानि, अन्यत्र चोपरितनमधस्तनञ्च योजनसहस्रं मुक्त्वा सर्वत्रापि यथासम्भवमावासा इति, तत्रासुरकुमारादीनां दक्षिणोत्तरदिग्भाविनां सर्वसंख्यया भवनानि चतुःषष्टिशतसहस्राणि, नागकुमाराणां चतुरशीतिलक्षाः, सुवर्णकुमाराणां द्विसप्ततिलक्षाः, वायुकुमाराणां षण्णवतिलक्षाः, द्वीपकुमारदिक्कुमारोदधिकुमारविद्युत्कुमारस्तनितकुमाराग्निकुमाराणां षण्णामपि दक्षिणोत्तरदिग्वर्त्तिलक्षणयुग्मरूपाणां प्रत्येकं षट्सप्ततिलक्षा भवन्ति भवनानाम्, एषाञ्च सर्वेषामप्येकत्र मीलने प्रागुक्ताः संख्या भवन्तीति ॥ ६७ ॥

देवाधिकाराद्गर्दतोयादिपरिवारमाह—

## गर्दतोयतुषितानां परिवारः सप्तसप्ततिसहस्राणि ॥ ६८ ॥

**गर्दतोयेति**, ब्रह्मलोकस्याधस्तात् रिष्टाख्यो विमानप्रस्तटो वर्त्तते, एतस्य आखाटकवत् समचतुरस्रसंस्थानसंस्थिता अष्ट कृष्णराजयः कालपुद्गलपंक्तियुक्तक्षेत्रविशेषा वर्त्तन्ते, एतासामष्टानां कृष्णराजीनामष्टस्ववकाशेषु राजीद्वयमध्यलक्षणेषु अष्टौ लोकान्तिकविमानानि भवन्ति, एषु चाष्टविधेषु लोकान्तिकविमानेषु सारस्वतादित्यवह्निवरुणगर्दतोयतुषिताव्याबाधाग्नेयनामानोऽष्टविधा देवनिकाया भवन्ति तत्र गर्दतोयानां तुषितानाञ्च देवानामुभयपरिवारसंख्यामीलनेन सप्तसप्ततिर्देवसहस्राणि परिवारः ॥६८॥

परिवारः स्वामिनो भवति अतः सुवर्णद्वीपकुमारावाससंख्यापूर्वकं स्वामिनमाह—

## अष्टसप्तत्याः सुवर्णद्वीपकुमारावासशतसहस्राणां वैश्रवणो महाराजा ॥ ६९ ॥

**अष्टसप्तत्या इति**, सोमयमवरुणवैश्रवणाभिधानानां लोकपालानां चतुर्थ उत्तरदिक्पालो वैश्रवणः, स हि वैश्रवणदेवनिकायानां सुवर्णकुमारदेवदेवीनां द्वीपकुमारदेवदेवीनां व्यन्तरव्यन्तरीणाञ्चाधिपत्यं करोति, तदाधिपत्याच्च तन्निवासानामप्याधिपत्यमसौ करोतीत्युच्यते, तत्र सुवर्णकुमाराणां दक्षिणस्यामष्टत्रिंशद्भवनलक्षाणि द्वीपकुमाराणाञ्च चत्वारिंशदित्येवमष्टसप्ततिरिति ॥ ६९ ॥

दिग्विशिष्टस्थितत्वाद्वैश्रमणस्य दिगुपस्थितेस्तद्वतद्वारान्तरमाह—

**विजयादिद्वाराणामन्योन्यमन्तरं सातिरेकाण्येकोनाशीतियोजनसहस्राणि ॥ ७० ॥**

**विजयेति,** जम्बूद्वीपस्य जगत्याश्चत्वारि द्वाराणि विजयवैजयन्तजयन्तापराजिताभिधानानि चतुश्चतुर्योजनविष्कम्भानि गव्यूतपृथुलद्वारशाखानि क्रमेण पूर्वादिदिक्षु भवन्ति, तेषां द्वारस्य चान्योऽन्यं 5 एकोनाशीतियोजनसहस्राणि सातिरेकाणीत्येवंलक्षणं व्यवधानरूपमन्तरं भवति, जम्बूद्वीपपरिधेः ३१६२२७ योजनानि क्रोशाः ३ धनूंषि १२८ अङ्गुलानि १३ सार्धानीत्येवंलक्षणस्यापकर्षितद्वारद्वारशाखाविष्कम्भस्य चतुर्विभक्तस्यैवंफलत्वादिति ॥ ७० ॥

द्वारान्तरस्य परिमाणरूपत्वेन परिमाणविशेषमाह—

**श्रेयांसत्रिपृष्ठोऽचलश्चोर्द्ध्वत्वेनाशीतिधनुर्देहमानः ॥ ७१ ॥** 10

**श्रेयांस इति,** अस्यामवसर्पिण्यां जात एकादशो जिनः श्रेयांसः, स एकविंशतिवर्षलक्षाणि कुमारत्वे तावन्त्येव प्रव्रज्यायां द्विचत्वारिंशद्राज्य इति चतुरशीतिमायुः पालयित्वा सिद्धः, तस्य देहमानमुत्सेधाङ्गुलेनाशीतिधनुः, आत्माङ्गुलेन च सर्वे जिनाश्चतुर्विंशतिरपि विंशत्यधिकशताङ्गुलप्रमाणदेहाः, श्रेयांसजिनकालभावी त्रिपृष्ठो वासुदेवः प्रथमः चतुरशीतिवर्षलक्षायुष्कः, चत्वारि लक्षाणि कुमारत्वे, शेषन्तु महाराज्ये । अचलो बलदेवोऽपरविदेहे सलिलावतीविजये वीतशोकायां नगर्यां जितशत्रोः 15 राज्ञो मनोहारीभार्यायामुत्पन्नः ॥ ७१ ॥

देहस्य सारं व्रतधारणं चेति व्रतात्मकप्रतिमाविशेषमाह—

**नवनवमिकायां प्रतिमायामेकाशीतिरात्रिंदिनानि ॥ ७२ ॥**

**नवेति,** नव नवमानि दिनानि यस्यां सा, नवसु नवकेषु नव नवमदिनानि भवन्ति तस्याश्च प्रतिमायां एकाशीती रात्रिंदिनानि भवन्ति, नवानां नवकानामेकाशीतिरूपत्वात्, तत्र प्रथमे नवके 20 प्रतिदिनमेकैका भिक्षा, एवमेकोत्तरया वृद्ध्या नवमे नवके नव नवेति सर्वासां पिण्डने चत्वारि पञ्चोत्तराणि भिक्षाशतानि भवन्ति ॥ ७२ ॥

प्रतिमाप्रतिपादकमहावीरस्य गर्भसङ्क्रमणकालमाह—

**महावीरो द्व्यशीत्यहोरात्रातिक्रमे त्र्यशीतितमे दिने गर्भाद्गर्भान्तरं नीतः ॥ ७३ ॥** 25

**महावीर इति,** चतुर्विंशतितमस्तीर्थकरो महावीरः स देवानन्दाब्राह्मणीकुक्षितः त्रिशलाभिधानक्षत्रियाकुक्षिं आषाढशुक्लषष्ठ्या आरभ्य द्व्यशीत्यां रात्रिंदिवेष्वतिक्रान्तेषु त्र्यशीतितमे दिने वर्त्तमाने आश्वयुजकृष्णत्रयोदश्यां अर्हदादयः अन्त्याधमतुच्छदरिद्रकृपणभिक्षाककुलेषु न कदाप्युत्पद्यन्ते किन्तु उग्रभोगराजन्येक्ष्वाकुक्षत्रियहरिवंशादिकुलेषु विशुद्धजातिकुलवंशेष्वेवेति विचिन्तितेन देवेन्द्रेण प्रेषितेन हरिनैगमेषिणा नीतः ॥ ७३ ॥ 30

तदुक्तत्वेन नरकावासयोनिप्रमुखानां संख्यामाह—

**चतुरशीतिलक्षाणि नरका योनिप्रमुखानि च ॥ ७४ ॥**

**चतुरिति,** 'तीसा य पण्णवीसा पणरस दसेव तिन्नि य हवंति । पंचूणसयसहस्सं पंचेव अनुत्तरा निरया ॥' इति नरकावाससंख्याविभागः । योनयो जीवोत्पत्तिस्थानानि ता एव प्रमुखानि
5 द्वाराणि योनिप्रमुखानि तान्यपि चतुरशीतिलक्षप्रमाणानि 'पुढवि दग अगणि मारुय एक्केक्के सत्त जोणि- लक्खाओ । वण पत्तेय अणंते दश चउदस जोणिलक्खाओ ॥ विगलिंदिएसु दो दो चउरो य नारय- सुरेसु । तिरिएसु होंति चउरो चोद्दसलक्खा उ मणुएसु ॥' इत्युक्तेः, तथाहि युवन्ति–भवान्तरसंक- मणकाले तैजसकार्मणशरीरवन्तः सन्तो जीवा औदारिकादिशरीरप्रायोग्यपुद्गलस्कन्धैर्मिश्रीभवन्त्यस्या- मिति योनिः, तत्र पृथिव्यबग्निमरुतां सम्बन्धिन्येकैकस्मिन् समूहे सप्त सप्त योनिलक्षा भवन्ति, तद्यथा—
10 सप्त पृथिवीनिकाये सप्तोदकनिकाये सप्ताग्निनिकाये सप्त वायुनिकाये, वनस्पतिकायो द्विविधः, प्रत्येकोऽ- नन्तकायश्च, तत्राद्यनिकाये दशयोनिलक्षाः, अन्त्ये चतुर्दश, विकलेन्द्रियेषु द्वीन्द्रियत्रीन्द्रियचतुरि- न्द्रियरूपेषु प्रत्येकं द्वे द्वे योनिलक्षाः, चतस्रो योनिलक्षा नारकाणां चतस्रो देवानां तिर्यक्षु पञ्चेन्द्रियेषु चतस्रो योनिलक्षाः चतुर्दश योनिलक्षा मनुष्येषु, सर्वसंख्यामीलने च चतुरशीतिर्योनिलक्षा भव- न्तीति । न चानन्तानां जीवानामुत्पत्तिस्थानमप्यनन्तं स्यादिति वाच्यम्, सकलजीवाधारभूतस्यापि
15 लोकस्य केवलमसंख्येयप्रदेशात्मकत्वात्, येन प्रत्येकसाधारणजन्तुशरीराण्यसंख्येयान्येव, ततो जीवा- नामानन्त्ये कथमुत्पत्तिस्थानानन्त्यम् । भवतु तर्ह्यसंख्येयानीति चेन्न केवलिदृष्टेन केनचिद्वर्णादिधर्मेण सदृशानां बहूनामपि तेषामेकयोनित्वस्येष्टत्वात्, ततोऽनन्तानामपि जन्तूनां केवलिविवक्षितवर्णादिसादृ- श्यतः परस्परभावचिन्तया च चतुरशीतिलक्षसंख्या एव योनयो भवन्ति न हीनाधिका इति ॥ ७४ ॥

योनिपरिभ्रमणनिवर्तकविशिष्टज्ञानक्रियोद्योतकोद्देशनकालानाह—

20 **सचूलिकाचारस्य पञ्चाशीतिरुद्देशनकालाः ॥ ७५ ॥**

**सचूलिकेति,** द्वितीयश्रुतस्कन्धयुतस्याचाराङ्गस्य नवाध्ययनात्मकप्रथमश्रुतस्कन्धस्य पञ्चाशी तिरुद्देशनकाला भवन्ति, तत्र प्रथमश्रुतस्कन्धे नवस्वध्ययनेषु क्रमेण सप्त षट् चत्वारश्चत्वारः षट् पञ्चाष्ट- चत्वारः सप्त चेति उद्देशनकालाः, द्वितीयश्रुतस्कन्धे तु प्रथमचूलिकायां सप्तस्वध्ययनेषु क्रमेणैकादश त्रय- स्त्रयः चतुर्षु द्वौ द्वौ द्वितीयायां सप्तैकसराणि अध्ययनान्येवं तृतीयैकाध्ययनात्मिका, एवं चतुर्थ्येपीति
25 सर्वमीलने पञ्चाशीतिरिति, निशीथन्तु भिन्नप्रस्थानमिति न गृह्यते ॥ ७५ ॥

उद्देशानन्तरमनुज्ञा भवतीति तद्विषयगणधरानाह—

**सुविधेर्गणा गणधराश्च षडशीतिः ॥ ७६ ॥**

**सुविधेरिति,** भारतेऽस्यामवसर्पिण्यां जातः पुष्पदन्तापरनामको नवमतीर्थंकरः, गर्भकालेऽस्य माता सम्यगाचारे रताऽतः सुविधिरिति नाम जातम्, शतधनुर्देहमानः, अस्य श्रामण्यपर्यायः अष्टा-
30 विंशतिपूर्वाङ्गहीनैकपूर्वलक्षप्रमाणः, अस्य गणाः षडशीतिर्गणधराश्च तावन्तः, प्रतिगणधरं भिन्नभि- न्नवाचनाचारक्रियाश्रयत्वात् ॥ ७६ ॥

गणधरोक्तमन्तरविशेषमाह—

मेरुपूर्वान्तगोस्तूभचरमान्तयोरन्तरं सप्ताशीतिरष्टाशीतिश्च योजनसहस्राणि ॥ ७७ ॥

**मेर्विति,** मेरोः पौरस्त्यान्ताद्गोस्तूभस्यावासपर्वतस्य पश्चिमचरमान्तं यावदन्तरं सप्ताशीतियोजनसहस्राणि, पूर्वान्ताज्जम्बूद्वीपान्तः पञ्चचत्वारिंशद्योजनसहस्राणि द्विचत्वारिंशद्योजनसहस्राणि 5 लवणजलधिमवगाह्य गोस्तूभो वेलंधरनागराजावासपर्वतः प्राच्यां दिशि वर्त्ततेऽत उक्तमन्तरं भवति, गोस्तूभस्य पूर्वचरमान्तविवक्षायान्तु गोस्तूभस्य सहस्रयोजनविष्कम्भत्वात्तस्यापि मीलनेनाष्टाशीतियोजनसहस्राण्यन्तरं भवतीति ॥ ७७ ॥

मेरौ ऋषभेति शाश्वतनामभृन्मूर्त्तेः सत्त्वात्तत्संबन्धादृषभनिर्वाणकालमाह—

ऋषभजिनोऽवसर्पिणीसुषमदुःषमायामेकोननवतिपक्षशेषे संसारादुपरतः ॥ ७८ ॥ 10

**ऋषभेति,** ऋषभोऽर्हन्नेकं वर्षसहस्रं छद्मस्थपर्यायं पूरयित्वैकं पूर्वलक्षं वर्षसहस्रोनं केवलिपर्यायं प्राप्य चतुरशीतिपूर्वलक्षाणि सर्वायुरुपभुज्य माघमासकृष्णपक्षत्रयोदशीदिने दशभिरनगारसहस्रैः सार्धं संपरिवृतोऽष्टापदशैलशिखरे चतुर्दशेन भक्तेनापानकेन पद्मासनेन निषण्णोऽस्यामवसर्पिण्यां सुषमदुःषमायामेकोननवतिपक्षेषु शेषेषु नक्षत्रेणाभिजिता योगमुपागते चन्द्रे पूर्वाह्णकालसमये कालं गतः सर्वदुःखप्रहीणो जातः ॥ ७८ ॥ 15

तीर्थंकरसाम्यात्तद्विशेषमाह—

अजितस्य शान्तिनाथस्य च गणा गणधराश्च नवतिर्नवतिवर्षाणि च स्वयम्भुवो विजयः ॥ ७९ ॥

**अजितस्येति,** सुगमम्, स्वयम्भूरस्यामवसर्पिण्यां जातस्तृतीयो वासुदेवस्तस्य नवतिवर्षाणि पृथिवीसाधनव्यापारः ॥ ७९ ॥ 20

तीर्थकृतामपि वैयावृत्यं भवतीति वैयावृत्त्यमाह—

परवैयावृत्त्यकर्मप्रतिमा एकनवतिः ॥ ८० ॥

**परेति,** परेषां स्वव्यतिरिक्तानां वैयावृत्त्यकर्मणि भक्तपानादिभिरुपष्टम्भक्रियाविषये प्रतिमा अभिग्रहविशेषाः, एतानि प्रतिमात्वेनाभिहितानि क्वचिदपि नोपलब्धानि केवलं विनयवैयावृत्त्यभेदा 25 एते सम्भवन्ति, तथाहि—दर्शनगुणाधिकेषु सत्कारादिर्दशधा विनयः, तत्र सत्कारो वन्दनादिः, अभ्युत्थानं—आसनत्यागः, सन्मानो—वस्त्रादिपूजनम्, आसनाभिग्रहः—तिष्ठत एवासनानयनपूर्वकमुपविशतात्रेति भणनम्, आसनानुप्रदानं—आसनस्य स्थानात् स्थानान्तरसञ्चारणम्, कृतिकर्म अञ्जलिप्रग्रहो गच्छतोऽनुगमनं स्थितस्य पर्युपासनमागच्छतोऽभिमुखगमनम्। तथा तीर्थंकरादीनां पञ्चदशानां पदानामनाशातनादिपदचतुष्टयगुणितत्वे षष्टिविधोऽनाशातनाविनयो भवति। औपचारिकविनयः सप्तधा 30 अभ्यासासनं—उपचरणीयस्यान्तिकेऽवस्थानम्, छन्दोऽनुवर्तनं—अभिप्रायानुवृत्तिः, कृतप्रतिकृतिः

प्रसन्ना आचार्याः सूत्रादि दास्यन्ति न नाम केवलं निर्जरेति मन्यमानस्याहारादिदानम्, कारितनिमित्त-करणं—सम्यक् शास्त्रपदमध्यापितस्य विशेषेण विनये वर्त्तनं तदर्थानुष्ठानञ्च । दुःखार्त्तगवेषणम्, सर्वार्थेषु देशकालज्ञानमनुमतिश्चेति, तथा वैयावृत्त्यमाचार्यादीनां दशधा, तत्र प्रव्राजनादिगुरुद्देशसमुद्देश-वाचनाचार्यविनयः पंचधा तथा च वैयावृत्त्यमाचार्यभिन्नं नवधाऽऽचार्यस्य च पञ्चेति चतुर्दशधेत्येकन-
5 वतिर्विनयभेदा एत एवाभिग्रहविषयीभूताः प्रतिमा उच्यन्त इति ॥ ८० ॥

प्रतिमाप्रस्तावादाह—

## द्विनवतिभेदाः प्रतिमाः ॥ ८१ ॥

**द्वीति,** समाध्युपधानविवेकप्रतिसंलीनतैकाकिविहारप्रतिमाभेदतः पञ्च प्रतिमाविशेषाः, श्रुतसमाधिचारित्रसमाधिप्रतिमाभेदतः प्रथमा प्रतिमा द्विधा, तत्र श्रुतप्रतिमा द्विषष्टिभेदा, आचारे प्रथमे श्रुत-
10 स्कन्धे पञ्च द्वितीये सप्तत्रिंशत्, स्थानाङ्गे षोडश व्यवहारे चतस्र इति । एताश्चारित्रस्वभावा अपि विशिष्टश्रुतवतां भवन्तीति श्रुतप्रधानतया श्रुतसमाधिप्रतिमात्वेनोपदिष्टाः । सामायिकछेदोपस्थापनीयाद्याः पञ्च चारित्रसमाधिप्रतिमाः, भिक्षुश्रावकभेदादुपधानप्रतिमा द्विविधाः, तत्र भिक्षुप्रतिमा 'मासाइसत्तंता' इत्यादिनाऽभिहितस्वरूपा द्वादश, उपासकप्रतिमास्तु 'दंसणवय' इत्यादिनाऽभिहितस्वरूपा एकादशेति सर्वास्त्रयोविंशतिः, विवेकप्रतिमाऽप्येकैव, इन्द्रियस्वरूपायाः पञ्चविधाया नोइन्द्रियस्वभावायाश्च योग-
15 कषायविविक्तशयनासनभेदतस्त्रिविधायाः प्रतिसंलीनताविषयाया भेदेनाविवक्षणात् । एकाकिविहारप्रतिमात्वेकैवेति द्विषष्टिः पञ्च त्रयोविंशतिरेका एका चेति सर्वा द्विनवतिर्भवन्ति ॥ ८१ ॥

प्रतिमाविराधकस्य ज्योतिर्लोकोत्पत्तेस्तद्विशेषाश्रयेणाह—

## त्रिनवतिमण्डलगस्सूर्यो विषमाहोरात्रकृत् ॥ ८२ ॥

**त्रिनवतीति,** सर्वबाह्यात्सर्वाभ्यन्तरं सर्वाभ्यन्तरात्सर्वबाह्यं प्रति वा गच्छन्निति शेषः ।
20 दिवसस्य रात्रेश्च समता तदा भवति यदा पञ्चदश पञ्चदश मुहूर्ता उभयोरपि भवन्ति, तत्र सर्वाभ्यन्तरमण्डलेऽष्टादशमुहूर्त्तमहर्भवति रात्रिश्च द्वादशमुहूर्त्ता सर्वबाह्ये तु व्यत्ययः, तत्र त्र्यशीत्यधिकमण्डलशते द्वौ द्वावेकषष्टिभागौ वर्द्धेते हीयेते च, यदा च दिनवृद्धिस्तदा रात्रिहानिः, रात्रिवृद्धौ च दिनहानिरिति, तत्र द्विनवतितमे मण्डले प्रतिमण्डलं मुहूर्त्तैकषष्टिभागद्वयवृद्ध्या त्रयो मुहूर्त्ता एकेनैकषष्टिभागेनाधिका वर्द्धन्ते वा हीयन्ते वा, तेषु च द्वादशमुहूर्त्तेषु मध्ये क्षिप्तेष्वष्टादशभ्योऽपसारितेषु
25 वा पञ्चदश मुहूर्त्ता उभयत्रैकेनैकषष्टिभागेनाधिका हीना वा भवन्तो द्विनवतितममण्डलस्यार्द्धे समाहोरात्रता तस्यैव चान्ते विषमाहोरात्रता भवति ॥ ८२ ॥

सूर्यचारस्यावधेरपि विषयत्वात्तदाश्रयेणाह—

## अजितस्य चतुर्नवतिरवधिज्ञानिशतानि, कुन्थुनाथस्य पञ्चनवतिर्वर्षसहस्राणि परमायुः, मौर्यपुत्रस्य पञ्चनवतिवर्षाणि ॥ ८३ ॥

30 **अजितस्येति,** द्वितीयतीर्थकृतोऽवधिज्ञानिनश्चतुर्नवतिशतानि, द्वादशसहस्राणि केवलिनस्तु विंशतिः सहस्राणि, मतान्तरेण द्वाविंशतिसहस्राणि, पञ्चशताधिकानि मनःपर्यवज्ञानिनः । सप्तदशतीर्थकरस्य कुमारत्वमाण्डलिकत्वचक्रवर्तित्वानगारत्वेषु प्रत्येकं त्रयोविंशतेर्वर्षसहस्राणामर्द्धाष्टमवर्षशतानाञ्च

भावात्सर्वायुः पञ्चनवतिर्वर्षसहस्राणि भवन्ति। मौर्यपुत्रो महावीरस्य सप्तमगणधरस्तस्य सर्वायुः पञ्च-नवतिर्वर्षाणि, गृहस्थत्वछद्मस्थत्वकेवलित्वेषु क्रमेण पञ्चषष्टिचतुर्दशषोडशानां वर्षाणां भावात्॥ ८३॥

भवनावासादपि गणधरा आगच्छन्तीति भवनसंख्याविशेषमाह—

## वायुकुमाराणां षण्णवतिर्भवनलक्षाणि॥ ८४॥

**वाय्विति,** असुरनागविद्युत्सुवर्णाग्निवायुस्तनितोदधिद्वीपदिक्कुमारा दशविधा भवनवासिनः, 5 तत्र भवनानि दक्षिणोत्तरदिग्भावीनि सर्वसंख्यया चतुःषष्टिशतसहस्राण्यसुरकुमाराणाम्, नागकुमा-राणां चतुरशीतिलक्षाः, सुवर्णकुमाराणां द्विसप्ततिलक्षाः, वायुकुमाराणां षण्णवतिलक्षाः, शेषाणां प्रत्येकं षट्सप्ततिलक्षा भवनानां भवन्ति॥॥ ८४॥

कुमाराणामष्टविधकर्माश्रयत्वात्तदुत्तरभेदानाचष्टे—

## अष्टानां कर्मप्रकृतीनां सप्तनवतिरुत्तरप्रकृतयः॥ ८५॥ 10

**अष्टानामिति,** यो मिथ्यात्वादिकलुषितरूपतयाऽसातादिवेदनीयादिकर्मणामभिनिर्वर्त्तकस्त-त्फलस्य च विशिष्टासातादेरुपभोक्ता नरकादिभवेषु च यथा कर्मविपाकोदयं संसर्त्ता सम्यग्दर्शनज्ञान-चारित्रसम्पन्नरत्नत्रयाभ्यासप्रकर्षवशाच्च निःशेषकर्मांशापगमतः परिनिर्वाता स जीवः, तेन जीवेन येन मिथ्यात्वाविरतिकषाययोगलक्षणसामान्यकारणेन क्रियते—विधीयतेऽञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरपुद्गल-निचिते लोके क्षीरनीरन्यायेन वह्न्यय:पिण्डवद्वा कर्मवर्गणाद्रव्यमात्मसम्बद्धं येन तत्कर्म—आत्मत्वेना- 15 विशिष्टानामात्मनां देवासुरमनुजतिर्यगादिनृपतिदरिद्रमनीषिमन्दादिवैचित्र्यहेतुत्वेन सिद्धम्, तच्च कर्म यैर्मिथ्यात्वादिभिश्चतुर्भिः क्रियते ज्ञानावरणदर्शनावरणवेदनीयमोहनीयान्तरायायुर्नामगोत्ररूपेणाष्टविधम्, कर्मणामेषां मूलप्रकृतिरूपाणामुत्तरप्रकृतयो यथा पञ्च ज्ञानावरणस्य नव दर्शनावरणस्य वेदनीयस्य द्वे मोहनीयस्याष्टाविंशतिरन्तरायस्य पञ्चाऽऽयुषश्चतस्रो नाम्नो द्विचत्वारिंशद्गोत्रस्य द्वे इति सर्वसंख्यया सप्तनवतिरिति॥ ८५॥ 20

पृथ्वीमयनन्दनस्य कर्मप्रकृतिजातत्वात्तदाश्रयेणाह—

## नन्दनवनस्योपरिष्टाच्चरमान्ततः पाण्डुकवनस्याधस्तनचरमान्तं याव-दष्टनवतिर्योजनसहस्राण्यन्तरं नन्दनवनस्य पूर्वचरमान्तात्पश्चिमचरमान्तं यावन्नवनवतिर्योजनशतानि च॥ ८६॥

**नन्दनवनस्येति,** नन्दनवनं मेरोः पञ्चयोजनशतोच्छ्रितप्रथममेखलाभाविपञ्चयोजनशतो- 25 च्छ्रितं तद्गततावन्मानोच्छ्रितकूटाष्टकस्य तद्ग्रहणेन ग्रहणात्, पाण्डुकवनं सौमनसवनस्य बहुसमभूमि-भागादूर्ध्वं षट्त्रिंशद्योजनसहस्राण्युत्प्लुत्यास्मिन्मन्दरपर्वते शिखरतले वर्त्तमानम्, तत्र नवनवत्या मेरोरु-च्चैस्त्वस्याद्ये सहस्रेऽपकृष्टे यथोक्तमन्तरं भवति। मेरोर्विष्कम्भो मूले दशसहस्राणि, नन्दनवनस्थाने तु नवनवतिर्योजनशतानि चतुःपञ्चाशच्च योजनानि षट् योजनैकादशभागा बाह्यो गिरिविष्कम्भो नन्दनव-नाभ्यन्तरस्तु मेरुविष्कम्भ एकोननवतिः शतानि चतुःपञ्चाशदधिकानि षट् चैकादशभागास्तथा पञ्च- 30 शतानि नन्दनवनविष्कम्भः, तदेवमभ्यन्तरगिरिविष्कम्भो द्विगुणनन्दनवनविष्कम्भश्च मिलितो यथा-क्रममन्तरं प्रायो भवतीति॥ ८६॥

प्रतिमया जङ्घाचारणविद्याचारणलब्धिका मुनयो नन्दनवनादौ यान्तीति प्रतिमाविशेषमाह—

**दशदशमिका भिक्षुप्रतिमा रात्रिंदिवशतेनेति ॥ ८७ ॥**

**दशेति,** दश दशमानि यस्यां सा दशदशमिका यस्यां हि दिनानां दशदशकानि भवन्ति, दशदशकानि शतं दिनानां, तत्र च प्रथमे दशके प्रतिदिनमेकैका भिक्षा द्वितीये द्वे द्वे एवं यावद्दशमे दश दशेत्येवं सर्वभिक्षासंकलने सार्धपंचशतानि भिक्षामानम् । इतिशब्दः संख्याक्रमेण स्थानवर्णनसमाप्तिसूचकः, पञ्चाशतादिवृद्ध्या कोटीकोट्यन्तानां समवायोऽस्य ग्रन्थस्य साररूपत्वान्न निरूप्यत इति भावः ॥ ८७ ॥

अमीषां स्थानानां द्वादशाङ्गे निरूपणाद्द्वादशाङ्गाश्रयेणाह—

**आचारगोचरविनयवैनयिकस्थानगमनचंक्रमणप्रमाणयोगनियोजनभाषासमितिगुप्तिशय्योपधिभक्तपानोद्गमोत्पादनैषणाविशुद्धिशुद्धाशुद्धग्रहणव्रतनियमतपउपधानान्याचाराङ्गे ॥ ८८ ॥**

**आचारेति,** आचाराङ्गे हि निर्ग्रन्थानां श्रमणानामाचारो व्याख्यायते, तत्राचारो ज्ञानाद्यनेकभेदभिन्नः, गोचरो भिक्षाग्रहणविधिः, विनयो ज्ञानादिविनयः, वैनयिकं तत्फलं कर्मक्षयादि, स्थानं—कायोत्सर्गोपवेशनशयनभेदान्निरूपम्, गमनं—विहारभूम्यादिषु गतिः, चङ्क्रमणं—उपाश्रयान्तरे शरीरश्रमव्यपोहार्थमितस्ततः सञ्चरणम् । प्रमाणं—भक्तपानाभ्यवहारोपध्यादेर्मानम्, योगनियोजनं—स्वाध्यायप्रत्युपेक्षणादिव्यापारेषु परेषां नियोजनम्, भाषाः—संयतस्य भाषाः सत्याऽसत्याऽमृषारूपाः, समितयः—ईर्यासमित्याद्याः पञ्च, गुप्तयः—मनोगुप्त्याद्यस्तिस्रः, शय्या—वसतिः, उपधिर्वस्त्रादिकः, भक्तं—अशनं, पानं—उष्णोदकादीनि, उद्गमोत्पादनैषणानां दोषाणां विशुद्धिः, तया शुद्धानामेव ग्रहणम् तथाविधकारणेऽशुद्धानां ग्रहणम् । व्रतानि—मूलगुणाः, नियमाः—उत्तरगुणाः, तपउपधानं—द्वादशविधं तपः एतत्सर्वं सुप्रशस्तमभिधीयत इति ॥ ८८ ॥

अथ द्वितीयाङ्गवक्तव्यतामाह—

**अचिरप्रव्रजितमुनिमनोगुणविशोधनाय स्वसमयसंस्थापकं सूत्रकृताङ्गम् ॥ ८९ ॥**

**अचिरेति,** चिरप्रव्रजितास्तु मुनयो निर्मलमतयो भवन्ति, अहर्निशं शास्त्रपरिचयाद्बहुश्रुतसम्पर्काच्चेति । अचिरकालप्रव्रजिताश्च कुसमयश्रवणेन मोहिताः सन्दिग्धा वा भवेयुः, सोऽयं तेषां यो मनोगुणो बुद्धिपर्यायः स विपर्ययसंशयात्मकत्वेन कुत्सितप्रवृत्तिहेतुत्वादशुभकर्मफलः, तस्य विशोधनाय—निर्मलत्वाधानाय त्रीणि त्रिषष्ट्यधिकानि परसमयशतानि बहुभिः प्रकारैः प्रतिक्षेपं कृत्वा स्वसमयो—जैनसिद्धान्तः स्थाप्यते सूत्रकृतेन ॥ ८९ ॥

अथ तृतीयाङ्गवक्तव्यतामाह—

**जीवादीनां द्रव्यगुणक्षेत्रकालपर्यवा एकादिविधवक्तव्यताश्च स्थाप्यन्ते स्थानेन ॥ ९० ॥**

**जीवादीनामिति,** यथावस्थितस्वरूपप्रतिपादनाय जीवादीनां द्रव्यगुणक्षेत्रकालपर्यवाः स्थानेन स्थाप्यन्ते, तत्र द्रव्यं-द्रव्यार्थता यथा जीवास्तिकायोऽनन्तानि द्रव्याणि, गुणः स्वभावो यथोपयोगस्वभावो जीवः, क्षेत्रं यथा असंख्येयप्रदेशावगाहनोऽसौ, कालो यथा अनाद्यपर्यवसितः, पर्यवाः—कालकृता अवस्थाः, यथा नारकत्वादयो बालत्वादयो वेति, एवमजीवादीनामपि भाव्यम्। एवमेतेषां पदार्थानामेकविधवक्तव्यता—एकविधत्वेनाभिधेयता, एवं द्विविधवक्तव्यता त्रिविधवक्तव्यतेत्येवं दशविधवक्तव्यतां यावद्द्रव्यादयः स्थाप्यन्त इति ॥ ९० ॥ 5

अथ चतुर्थाङ्गवक्तव्यतामाह—

## एकोत्तरादिवृद्ध्याऽऽगमस्य पर्यवपरिमाणज्ञापकः समवायः ॥ ९१ ॥

**एकोत्तरेति,** समवायः सम्यक्परिच्छेदः, तद्धेतुश्च ग्रन्थोऽपि समवायः, आगमस्य—जगज्जीवहितस्य भगवतो द्वादशाङ्गलक्षणगणिपिटकस्य पर्यवपरिमाणं—अभिधेयादितद्धर्मसंख्यानं तच्च शतं यावदेकोत्तरपरिवृद्ध्या समनुगीयते ततः परमनेकोत्तरिकया परिवृद्ध्या, एवमेकेन्द्रियादिभेदेन पञ्चप्रकारा जीवाः पुनः पर्याप्तापर्याप्तादिभेदेन नानाविधा वर्णिताः तथा तद्धर्मा अपीति ॥ ९१ ॥ 10

अथ पञ्चमाङ्गवक्तव्यतामाचष्टे—

## भगवता द्रव्यगुणादिभिर्व्याकृतानां संशयितपृष्टानां श्रुतार्थानां व्याख्याकृद्व्याख्याप्रज्ञप्तिः ॥ ९२ ॥ 15

**भगवतेति,** अत्रापि स्वपरोभयसमया जीवा अजीवा जीवाजीवाश्च व्याख्यायन्ते, तथा नानाविधसुरनरेन्द्रराजर्षिभिर्नानाविधसंशयवद्भिः पृष्टानां भगवता महावीरेण विस्तरेण भाषितानां षट्त्रिंशत्सहस्राणां व्याकरणानामत्रोपनिबन्धनात् श्रुतविषया अर्थाः श्रुता आकर्णिता वा जिनसकाशे गणधरेण येऽर्थाः श्रुतार्थास्तेऽत्र नाना प्रकारा व्याख्यायन्ते। भगवता कथं व्याकृता इत्यत्रोक्तं द्रव्यगुणादिभिरिति, द्रव्यगुणक्षेत्रकालपर्यवप्रदेशपरिणामयथास्तिभावानुगमनिक्षेपनयप्रमाणोपक्रमैरित्यर्थः, तत्र द्रव्याणि 20 धर्मास्तिकायादीनि, गुणाः—ज्ञानवर्णादयः, क्षेत्रमाकाशम्, कालः—समयादिः, पर्यवाः—स्वपरभेदभिन्ना धर्माः, कालकृता अवस्था नवपुराणादयो वा, प्रदेशाः—निरंशावयवाः, परिणामाः—अवस्थातोऽवस्थान्तरगमनानि, यथास्तिभावः—येन प्रकारेण सत्ता, अनुगमः—संहितादिव्याख्यानप्रकारः, उद्देशनिर्देशनिर्गमादिद्वारकलापात्मको वा, निक्षेपः—नामस्थापनाद्रव्यभावैर्वस्तुनो न्यासः, नयप्रमाणं नया नैगमादयः सप्त, द्रव्यास्तिकपर्यायास्तिकभेदात् ज्ञानक्रियाभेदान्निश्चयव्यवहारभेदाद्वा द्वौ, त एव तावेव 25 वा प्रमाणं—वस्तुतत्त्वपरिच्छेदनं नयप्रमाणम्, उपक्रमः—आनुपूर्व्यादिः ॥ ९२ ॥

अथ षष्ठाङ्गवक्तव्यतां निदर्शयति—

## ज्ञाताधर्मकथासु संयमप्रतिज्ञापालने दुर्बलानां घोरपरीषहपराजितानां विषये गार्ध्येन विराधितज्ञानादीनां परिभ्रमणं व्यावर्ण्यते ॥ ९३ ॥

**ज्ञातेति,** ज्ञातानि—उदाहरणानि, तत्प्रधाना धर्मकथाः, अथवा प्रथमश्रुतस्कन्धः ज्ञाताभिधा- 30 यकत्वात् ज्ञातानि, द्वितीयस्तु धर्मकथाभिधायकत्वाद्धर्मकथाः, ततश्च ज्ञातानि च धर्मकथाश्च ज्ञाता-

धर्मकथाः, दीर्घत्वं संज्ञात्वात्, तत्रोदाहरणभूतमेघकुमारादीनां नगरादयो व्याख्यायन्ते तथा कर्मविनयकरे विनयकरणजिनस्वामिशासनवरे प्रवचने प्रव्रजितानां संयमप्रतिज्ञापालने ये धृतिमतिव्यवसायास्तेषु दुर्बलानां तत्र धृतिश्चित्तस्वास्थ्यं मतिर्बुद्धिः, व्यवसायोऽनुष्ठानोत्साहः, एवं तपोनियमो नियंत्रितं तपः, तपउपधानं—अनियंत्रितं तपः, तत्र पराङ्मुखीभूतानां घोरैः परीषहैः पराजितानामत
5 एव प्रतिरुद्धसिद्धालयमार्गगतीनां तुच्छेषु विषयसुखेष्वाशावशदोषेण मूर्च्छितानां विराधितज्ञानदर्शनचारित्राणां संसारेऽनन्तक्लेशरूपासु नारकतिर्यक्कुमानुषकुदेवत्वरूपासु दुर्गतिषु परिभ्रमणं व्याख्यायते, तथा धीराणां सुगत्यादीनि च ॥ ९३ ॥

अथ सप्तमाङ्गवक्तव्यतामाविष्करोति—

**उपासकानां नगरादीनि शीलव्रतविरमणगुणप्रत्याख्यानपौषधोपवा-
10 सश्रुतपरिग्रहतपउपधानप्रतिमाद्य उपासकदशासु ॥ ९४ ॥**

**उपासकानामिति,** व्यावर्ण्यन्त इति वचनविपरिणामेनान्वयः, एवमग्रेऽपि । उपासकाः श्रावकाः, तद्गतक्रियाकलापप्रतिबद्धा दशाः—दशाध्ययनोपलक्षिता उपासकदशास्तासु उपासकानां नगरोद्यानचैत्यवनखण्डराजानः, अम्बापितरौ समवसरणानि धर्माचार्या धर्मकथा ऐहलौकिकपारलौकिका ऋद्धिविशेषाः, तथा शीलव्रतानि—अणुव्रतानि, विरमणानि—रागादिविरतयः, गुणाः—गुणव्रतानि,
15 प्रत्याख्यानानि नमस्कारसहितादीनि, पौषधः—अष्टम्यादिपर्वदिनं तत्रोपवसनं—आहारशरीरसत्कारादित्यागः, श्रुतपरिग्रहाः प्रव्रज्यातः, तपउपधानानि प्रतीतानि, प्रतिमाः—एकादशोपासकप्रतिमाः, उपसर्गाः—देवादिकृतोपद्रवाः, संलेखनाभक्तपानप्रत्याख्यानानि, पादपोपगमनानि, देवलोकगमनानि, सुकुलप्रत्यायातिः, पुनर्बोधिलाभोऽन्तक्रिया चैते विशेषेणाऽऽख्यायन्ते ॥ ९४ ॥

अथाष्टमाङ्गवक्तव्यतामादर्शयति—

20 **अन्तकृतानां नगरादीनि क्षमामार्दवादीनि केवललाभः पादपोपगमनादीन्यन्तकृतदशासु ॥ ९५ ॥**

**अन्तकृतानामिति,** अन्तो विनाशः स च कर्मणस्तत्फलस्य वा संसारस्य, स कृतो यैस्तेऽन्तकृतास्ते च तीर्थकरादयः, तेषां दशाः दशाध्ययनोपलक्षिताः तासु, अन्तकृतानां नगरादीनि नगरोद्यानचैत्यवनराजानः अम्बापितरौ समवसरणादीनि च, तथा क्षमामार्दवार्जवशौचसत्यसप्तदशविधसंयमो-
25 त्तमब्रह्मचर्याकिञ्चन्यतपस्त्यागसमितिगुप्त्यादयः, सर्वविरतिं प्राप्तानां जितपरीषहाणां घातिकर्मक्षये सति केवलस्य ज्ञानादेर्लाभः, यावद्वर्षाणि प्रव्रज्यापर्यायस्तपोविशेषाश्रयणादिना मुनिभिः पालितो यत्र शत्रुञ्जयपर्वतादौ यावन्ति भक्तानि छेदयित्वा यो मुनिरन्तकृतो जातः तत्सर्वमत्राख्यायते ॥ ९५ ॥

अथ नवमाङ्गवक्तव्यतां प्रकटीकरोति—

**अनुत्तरोपपातिकानां नगरादीनि समवसरणानि जिनातिशेषाः श्रम-
30 णोत्तमादीनां वर्णका अनुत्तरविमानविषयसुखश्चानुत्तरोपपातिकदशासु ॥९६॥**

**अनुत्तरोपपातिकानामिति,** नास्मादुत्तरो विद्यत इत्यनुत्तरः, उपपतनमुपपातो जन्म,

अनुत्तरः प्रधानः संसारेऽन्यस्य तथाविधस्याभावादुपपातो येषां ते तथा, त एवानुत्तरोपपातिकास्तद्वक्तव्यताप्रतिपादका दशाः दशाध्ययनोपलक्षिता अनुत्तरोपपातिकदशाः, तत्रानुत्तरोपपातिकानां—साधूनां नगराण्युद्यानानि चैत्यानि वनखण्डा राजान एवमादयो वर्ण्यन्ते तथा परममाङ्गल्यत्वेन जगद्धितानि तीर्थकरसमवसरणानि जिनातिशेषा अत्रैव द्वात्रिंशसूत्रे उक्ता अतिशयाः जिनशिष्याणां श्रमणोत्तमानां गणधरादीनां स्थिरयशसां परीषहवृन्दप्रमर्दकानां तपोदीप्तज्ञानचारित्रदर्शनानां प्रशस्तक्षमागुणध्वजानां 5 श्लाघा आख्यायन्ते तथा ये यत्र यावन्ति च भक्तानि छेदयित्वा लब्ध्वा च समाधिमुत्तमं जिनवरध्यानयोगयुक्ता उपपन्ना मुनिवरोत्तमा यथा अनुत्तरेषु प्राप्नुवन्ति चानुत्तरविमानेषु यथा विषयसुखं तत्सर्वमनुत्तरोपपातिकदशास्वाख्यायते ॥ ९६ ॥

अथ दशमाङ्गवक्तव्यतां विशदीकरोति—

**प्रश्ना अप्रश्नाः प्रश्नाप्रश्ना विद्यातिशया यक्षादिभिः संवादादयः 10 प्रश्नव्याकरणेषु ॥ ९७ ॥**

**प्रश्ना इति**, प्रश्नः प्रतीतः, तन्निर्वचनं व्याकरणं प्रश्नानां व्याकरणानाञ्च योगात् प्रश्नव्याकरणानि, तत्राङ्गुष्ठबाहुप्रभादिका मंत्रविद्याः प्रश्नाः, याः पुनर्विद्या मंत्रविधिना जप्यमाना अपृष्टा एव शुभाशुभं कथयन्ति ता अप्रश्नाः, तथाऽङ्गुष्ठादिप्रश्नभावं तदभावं च प्रतीत्य या विद्याः शुभाशुभं कथयन्ति ताः प्रश्नाप्रश्नाः, तथा अन्ये विद्यातिशयाः स्तम्भस्तोभवशीकरणविद्वेषीकरणोच्चाटनादयः, भवनपतिविशे- 15 षैर्नागसुपर्णैर्यक्षादिभिश्च सह साधकस्य तात्त्विकाः शुभाशुभगताः संलापा एवमादयोऽत्र वर्ण्यन्ते ॥ ९७ ॥

अथैकादशाङ्गवक्तव्यतामाख्याति—

**शुभाशुभकर्मणां फलविपाको विपाकश्रुते ॥ ९८ ॥**

**शुभेति**, विपचनं विपाकः—शुभाशुभकर्मपरिणामस्तत्प्रतिपादकं श्रुतं विपाकश्रुतम्, तस्मिन् फलरूपो विपाको द्विविधो दुःखविपाकः सुखविपाकश्चेति, तत्र दुःखविपाकानां नगरोद्यानचैत्यवनख- 20 ण्डराजानो मातापितरौ समवसरणानि धर्माचार्यो धर्मकथा नगरगमनानि संसारप्रबन्धो दुःखपरम्परा वर्ण्यन्ते तथा सुखविपाकानां नगरादयः समवसरणधर्माचार्यधर्मकथा इहपरलौकिकर्द्धयः प्रव्रज्याः श्रुतपरिग्रहास्तपोपधानानि परित्यागाः प्रतिमाः संलेखनाः भक्तप्रत्याख्यानानि पादपोपगमनानि देवलोकगमनानि सुकुलप्रत्यायातिः, पुनर्बोधिलाभोऽन्तक्रिया उपवर्णिता विस्तरेण ॥ ९८ ॥

अथ द्वादशाङ्गवक्तव्यतां प्ररूपयति— 25

**दृष्टिवादे सर्वभावप्ररूपणा ॥ ९९ ॥**

**दृष्टीति**, दृष्टयो दर्शनानि, वदनं वादः दृष्टीनां वादो यत्रासौ दृष्टिवादः तत्र सर्वभावप्ररूपणा क्रियते, स समासतः पञ्चविधः परिकर्मसूत्राणि पूर्वगतं अनुयोगः चूलिका चेति, परिकर्म सप्तविधं सिद्धश्रेणिकापरिकर्म मनुष्यश्रेणिकापरिकर्म पृष्टश्रेणिकापरिकर्म अवगाहनाश्रेणिकापरिकर्म उपसम्पद्यश्रेणिकापरिकर्म विप्रत्यक्तश्रेणिकापरिकर्म च्युताच्युतश्रेणिकापरिकर्मेति षडादिमानि परिकर्माणि स्वसाम- 30 यिकान्येव, गोशालकप्रवर्त्तिताऽऽजीविकपाखण्डिकसिद्धान्तमतेन पुनश्च्युताच्युतश्रेणिकापरिकर्मसहितानि सप्त, एतेषामुत्तरभेदतः त्र्यशीतिविधत्वम्। सूत्राणि ऋजुकादीनि द्वाविंशतिः, विभागतोऽष्टाशीतिः,

पूर्वगतं पूर्वमुक्तम् । मूलप्रथमानुयोगो गण्डिकानुयोगश्चेत्यनुयोगो द्विधा, तीर्थकराणां प्रथमसम्यक्त्वावाप्तिलक्षणपूर्वभवादिगोचरो मूलप्रथमानुयोगः, एकवक्तव्यतार्थाधिकारानुगता वाक्यपद्धतयो गण्डिका उच्यन्ते तासामनुयोगः स अनेकविधः कुलकरतीर्थकरगणधरादिभेदात् । चूलिका चतुर्णां पूर्वाणां चूलिकाः शेषाणि पूर्वाण्यचूलिकानीति ॥ ९९ ॥

5 अस्य द्वादशाङ्गस्य नित्यत्वं सम्मानयितुर्विराधयितुश्च फलमाचष्टे—

**अचलं नित्यं द्वादशाङ्गं विराध्यातीतेऽनागते चानन्ताः प्रत्युत्पन्ने संख्येयाः संसारमनुवर्त्तन्त आराध्य व्यतिव्रजन्ति च ॥ १०० ॥**

**अचलमिति,** इदं द्वादशाङ्गं गणिपिटकं न कदाचिन्नासीदनादित्वात्, न कदाचिन्न भवति सदैव भावात्, न कदाचिन्न भविष्यत्यपर्यवसितत्वात् किन्त्वभूच्च भवति च भविष्यति चेति त्रिका-
10 लभावित्वादचलमत एव मेर्वादिवद्ध्रुवमत एव नियतं पञ्चास्तिकायेषु लोकवचनवत्, नियतत्वादेव शाश्वतं समयावलिकादिषु कालवचनवत्, शाश्वतत्वादेव वाचनादिप्रदानेऽप्यक्षयं गंगासिंधुप्रवाहेऽपि पद्मह्रदवत्, अक्षयत्वादेवाव्ययं मानुषोत्तराद्बहिः समुद्रवत्, अव्ययत्वादेव स्वप्रमाणेऽवस्थितं जम्बूद्वीपादिवत्, अवस्थितत्वादेव च नित्यमाकाशवत् । इदं द्वादशाङ्गं विराध्य जीवाश्चतुरन्तं संसारकान्तारमनुपरिवर्त्तन्ते, इदं हि द्वादशाङ्गं सूत्रार्थोभयभेदेन त्रिविधम्, विराधनञ्चानाज्ञया ततश्च
15 सूत्रानाज्ञयाऽभिनिवेशतोऽन्यथापाठादिलक्षणयाऽतीतकालेऽनन्ता जीवाश्चतुरन्तं संसारकान्तारमनुपरावृत्तवन्तो जमालिवत्, अर्थानाज्ञयाऽभिनिवेशतोऽन्यथाप्ररूपणादिलक्षणया गोष्ठामाहिलवत्, उभयानाज्ञया तु पञ्चविधाचारपरिज्ञानकरणोद्यतगुर्वादेशादेरन्यथाकरणलक्षणया गुरुप्रत्यनीकद्रव्यलिङ्गधार्यनेकश्रमणवत्, वर्त्तमाने काले विशिष्टविराधकमनुष्यजीवानां संख्येयतया संख्येया इत्युक्तम्, त्रिविधामाज्ञामाराध्य जीवाश्चतुर्गतिकसंसारोल्लङ्घनेन मुक्तिमवाप्ता अवाप्नुवन्ति, अवाप्स्यन्ति च तावन्त एवेति ॥१००॥

20 **समवायाङ्गपयोधेरहमहमिकया समुत्थिता मुक्ताः ।**
**कस्य मनस्योत्कण्ठां नोद्दीपयति स्रग् कर्तुम् ॥**

इति श्रीतपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितायां सूत्रार्थमुक्तावल्यां समवायाङ्ग-
25 लक्षणा पञ्चमी मुक्तासरिका वृत्ता ।